# अथ शाश्वताश्वतजिनस्तवनम्

नित्ये श्रीभुवनाधिवासभुवनव्राते मणिद्योतिते, कोट्यः सप्तजिनौकसां द्विकयुता लक्षास्तथा सप्ततिः । प्रत्येकं भुवनादिषु प्रतिगृहं स्तूपत्रयं शाश्वतं, तत्र श्रीऋषभादयो जिनवराः कुर्वन्तु वो मङ्गलम् ॥ १ ॥ रम्ये व्यन्तरभौमसत्कनगरव्यूहे सुरत्नोज्ज्वले, श्रीसिद्धायतनानि सन्ति गणनातीतानि नित्यानि च । तेभ्यः संख्यगुणानि चैत्यभवनान्यन्तः सदा ज्योतिषां, तत्र० ॥ २ ॥ सौधर्मादिविमानराजिषु तथा ग्रैवेयकानुत्तरे, स्वर्गेष्वस्ति सहस्रसप्तनवतिः शुद्धा त्रयोविंशतिः । चैत्यानामभितश्चतुर्भिरधिकाशीतिश्च लक्षाः सदा, तत्र० ॥ ३ ॥ वैताढ्येषु शतं च सप्ततियुतं नित्यं तथा विंशतिः, चैत्यानां गजदन्तकेषु नवतिः कुर्वद्रिषेषु स्थिता । त्रिंशद्वर्षधरेषु मेरुषु तथाऽशीतिश्च पञ्चाधिका, तत्र० ॥ ४ ॥ प्रत्येकं रुचकेषु मानुषनगे चत्वारि सत्कुण्डले, चत्वार्यायतनानि सन्ति सततं सर्वेषुकाराद्रिषु । वक्षस्कारगिरिष्वशीतिरनघा नंदीश्वरे विंशतिः, तत्र० ॥ ५ ॥ ख्यातोऽष्टापदपर्वतो गजपदः सम्मेतशैलाभिधः, श्रीमान् रैवतकः प्रसिद्धमहिमा शत्रुञ्जयो मण्डपः । वैभारः कनकाचलोर्बुदगिरिश्रीचित्रकूटादयः, तत्र० ॥ ६ ॥ वैताढ्ये रथनूपुरादिनगरीस्तोमो विदेहेष्वपि, क्षेमादिर्नगरीव्रजोऽस्ति भरतेऽयोध्या तथैरावते । सौर्यं कुण्डपुरीपुरं गजपुरं चंपा च वाराणसी, तत्र० ॥ ७ ॥ अस्त्यानन्दपुरं फलवर्द्धिनगरी श्रीसत्यनाम्ना पुरं, नाशिक्यं भृगुकच्छमङ्गदपुरं सोपारकं विश्रुतम् । मोढेरं मथुराऽणहिल्लनगरं श्रीस्तम्भनं पावनम्, तत्र० ॥ ८ ॥ देवाः श्रीऋषभादयो प्रभृतयः श्रीपुण्डरी-

ष्ठ

कादयः, श्रीमन्तो भरतेश्वरप्रभृतयः श्रीबाहुबल्यादयः । श्री
सद्रामयुधिष्ठिरप्रभृतयः प्रद्युम्नशाम्बादयः, श्रीमद्गौतममुख्य-
साधुयतयः कुर्वन्तु वो मङ्गलम् ॥ ९ ॥ यस्मात्तीर्थमिदं प्रवृत्ति-
मगमत् स श्रीसुधर्मागुरु–र्धन्यो धन्यमुनिः सुकोशलमुनिः श्री
शालिभद्राभिधः मेतार्योऽप्यदृढप्रहार सुपार्तिर्मेघो दशार्णाभिधः,
श्रीमन्तः करकण्डुमुख्ययतयः कुर्वन्तु वो मङ्गलम् ॥ १० ॥
श्रीजम्बूप्रभवः प्रभुर्गतभवः शय्यम्भवः श्रीयशो–भद्राख्यश्रुतकेव-
ली च चरम-श्रीभद्रबाहुर्गुरुः । शीलस्वर्णकषोपलः सविमलः श्री
स्थूलभद्रप्रभु, सर्वेऽप्यार्यमहागिरिप्रभृतयः कुर्वन्तु वो मङ्गलम्
॥ ११ ॥ श्यामाचार्य समुद्रमङ्गु समिता श्रीभद्रगुप्तादयः, श्रीमान्
सिंहगिरिस्तथा धनगिरिस्वामी च वज्राभिधः । श्रीवैरो मुनिरार्य
क्षेतगुरः पुष्पो गुरुस्कन्दिलः, श्रीदेवर्द्धिपुरस्सराः श्रुतधराः
र्वन्तु वो मङ्गलम् ॥ १२ ॥ ब्राह्मी चन्दनबालिका भगवती
राजीमती द्रौपदी, कौशल्या च मृगावती च सुलसा सीता सुभद्रा
शिवा । कुन्ती शीलवती नलस्य दयिता चूला प्रभावत्ययो,
पद्मावत्यपि सुन्दरी दिनमुखे कुर्वन्तु वो मङ्गलम् ॥ १३ ॥
तीतानागतवर्त्तमानविषयास्सर्वेऽपि तीर्थकरा, सिद्धा सूरिवराश्च
वाचकवराः सर्वेऽपि सत्साधवः । धर्मश्रीजिनपुङ्गवैर्निगदितो
ज्ञानादिरत्नत्रयं, श्रीमन्तो जिनसिद्धसाध्वतिशया कुर्वन्तु वो
मङ्गलम् ॥ १४ ॥ शाश्वता शाश्वतान्येव, तीर्थानि पुरुषोत्तमाः ।
भव्येभ्यो मङ्गलं ददु., स्तुता श्रीधर्मसूरिभि ॥ १५ ॥